# श्रीसरस्वतीस्तोत्रं अथवा वाणीस्तवनं याज्ञ्यवल्क्योक्त

अथ पञ्चमोऽध्यायः ।
नारायण उवाच ।
वाग्देवतायाः स्तवनं श्रूयतां सर्वकामदम् ।
महामुनिर्याज्ञवल्क्यो येन तुष्टाव तां पुरा ॥ १॥

गुरुशापाच्च स मुनिर्हतविद्यो बभूव ह ।
तदा जगाम दुःखार्तो रविस्थानं च पुण्यदम् ॥ २॥

सम्प्राप्यतपसा सूर्यं कोणार्के दृष्टिगोचरे ।
तुष्टाव सूर्यं शोकेन रुरोद स पुनः पुनः ॥ ३॥

सूर्यस्तं पाठयामास वेदवेदाङ्गमीश्वरः ।
उवाच स्तुहि वाग्देवीं भक्त्या च श्रुतिहेतवे ॥ ४॥

तमित्युक्त्वा दीननाथो ह्यन्तर्धानं जगाम सः ।
मुनिस्नात्वा च तुष्टाव भक्तिनम्रात्मकन्धरः ॥ ५॥

याज्ञवल्क्य उवाच ।
कृपां कुरु जगन्मातर्मामेवं हततेजसम् ।
गुरुशापात्स्मृतिभ्रष्टं विद्याहीनं च दुःखितम् ॥ ६॥

ज्ञानं देहि स्मृतिं देहि विद्यां देहि देवते ।
प्रतिष्ठां कवितां देहि शाक्तं शिष्यप्रबोधिकाम् ॥ ७॥

ग्रन्थनिर्मितिशक्तिं च सच्छिष्यं सुप्रतिष्ठितम् ।
प्रतिभां सत्सभायां च विचारक्षमतां शुभाम् ॥ ८॥

लुप्तां सर्वां दैववशान्नवं कुरु पुनः पुनः ।
यथाऽङ्कुरं जनयति भगवान्योगमायया ॥ ९॥

ब्रह्मस्वरूपा परमा ज्योतिरूपा सनातनी ।
सर्वविद्याधिदेवी या तस्यै वाण्यै नमो नमः ॥ १०॥

यया विना जगत्सर्वं शश्वज्जीवन्मृतं सदा ।
ज्ञानाधिदेवी या तस्यै सरस्वत्यै नमो नमः ॥ ११॥

यया विना जगत्सर्वं मूकमुन्मत्तवत्सदा ।
वागधिष्ठातृदेवी या तस्यै वाण्यै नमो नमः ॥ १२॥

हिमचन्दनकुन्देन्दुकुमुदाम्भोजसंनिभा ।
वर्णाधिदेवी या तस्यै चाक्षरायै नमो नमः ॥ १३॥

विसर्ग बिन्दुमात्राणां यदधिष्ठानमेव च ।
इत्थं त्वं गीयसे सद्भिर्भारत्यै ते नमो नमः ॥ १४॥

यया विनाऽत्र संख्याकृत्संख्यां कर्तुं न शक्नुते ।
काल संख्यास्वरूपा या तस्यै देव्यै नमो नमः ॥ १५॥

व्याख्यास्वरूपा या देवी व्याख्याधिष्ठातृदेवता ।
भ्रमसिद्धान्तरूपा या तस्यै देव्यै नमो नमः ॥ १६॥

स्मृतिशक्तिर्ज्ञानशक्तिर्बुद्धिशक्तिस्वरूपिणी ।
प्रतिभा कल्पना शक्तिर्या च तस्यै नमो नमः ॥ १७॥

सनत्कुमारो ब्रह्माणं ज्ञानं पप्रच्छ यत्र वै ।
बभूव जडवत्सोऽपि सिद्धान्तं कर्तुमक्षमः ॥ १८॥

तदाऽऽजगाम भगवानात्मा श्रीकृष्ण ईश्वरः ।
उवाच स च तं स्तौहि वाणीमिति प्रजापते ॥ १९॥

स च तुष्टाव तां ब्रह्मा चाऽऽज्ञया परमात्मनः ।
चकार तत्प्रसादेन तदा सिद्धान्तमुत्तमम् ॥ २०॥

यदाप्यनन्तं पप्रच्छ ज्ञानमेकं वसुन्धरा ।
बभूव मूकवत्सोऽपि सिद्धान्तं कर्तुमक्षमः ॥ २१॥

तदा त्वां च स तुष्टाव सन्त्रस्तः कश्यपाज्ञया ।
ततश्चकार सिद्धान्तं निर्मलं भ्रमभञ्जनम् ॥ २२॥

व्यासः पुराणसूत्रं समपृच्छद्वाल्मिकिं यदा ।
var व्यासः पुराणसूत्रञ्च समपृच्छतवाल्मिकिम् ।
मौनीभूतः स सस्मार त्वामेव जगदम्बिकाम् ॥ २३॥

तदा चकार सिद्धान्तं त्वद्वरेण मुनीश्वरः ।

स प्राप निर्मलं ज्ञानं प्रमादध्वंसकारणम् ॥ २४॥

पुराण सूत्रं श्रुत्वा स व्यासः कृष्णकलोद्भवः ।
त्वां सिषेवे च दध्यौ तं शतवर्षं च पुष्क्करे ॥ २५॥

तदा त्वत्तो वरं प्राप्य स कवीन्द्रो बभूव ह ।
तदा वेदविभागं च पुराणानि चकार ह ॥ २६॥

यदा महेन्द्रे पप्रच्छ तत्वज्ञानं शिवा शिवम् ।
क्षणं त्वामेव सञ्चिन्त्य तस्यै ज्ञानं दधौ विभुः ॥ २७॥

पप्रच्छ शब्दशास्त्रं च महेन्द्रस्च बृहस्पतिम् ।
दिव्यं वर्षसहस्रं च स त्वां दध्यौ च पुष्करे ॥ २८॥

तदा त्वत्तो वरं प्राप्य दिव्यं वर्षसहस्रकम् ।
उवाच शब्दशास्त्रं च तदर्थं च सुरेश्वरम् ॥ २९॥

अध्यापिताश्च यैः शिष्याः यैरधीतं मुनीश्वरैः ।
ते च त्वां परिसञ्चिन्त्य प्रवर्तन्ते सुरेश्वरि ॥ ३०॥

त्वं संस्तुता पूजिता च मुनीन्द्रमनुमानवैः ।
दैत्यैश्च सुरैश्चापि ब्रह्मविष्णुशिवादिभिः ॥ ३१॥

जडीभूतः सहस्रास्यः पञ्चवक्त्रश्चतुर्मुखः ।
यां स्तोतुं किमहं स्तौमि तामेकास्येन मानवः ॥ ३२॥

इत्युक्त्वा याज्ञवल्क्यश्च भक्तिनम्रात्मकन्धरः ।
प्रणनाम निराहारो रुरोद च मुहुर्मुहुः ॥ ३३॥

तदा ज्योतिः स्वरूपा सा तेनाऽदृष्टाऽप्युवाच तम् ।
सुकवीन्द्रो भवेत्युक्त्वा वैकुण्ठं च जगाम ह ॥ ३४॥

महामूर्खश्च दुर्मेधा वर्षमेकं च यः पठेत् ।
स पण्डितश्च मेधावी सुकविश्च भवेद्ध्रुवम् ॥ ३५॥

इति श्रीब्रह्मवैवर्ते महापुराणे प्रकृतिखण्डे नारदनारायणसंवादे
याज्ञवल्क्योक्त वाणीस्तवनं नाम पञ्चमोऽध्यायः ॥

इति श्रीमद्देवीभागवते महापुराणे नवमस्कन्धे
याज्ञवल्क्यकृतं सरस्वतीस्तोत्रवर्णनं नाम पञ्चमोऽध्यायः ॥

श्रीसरस्वतीस्तोत्रम्

श्रीगणेशाय नमः ।

श्वेतपद्मासना देवी श्वेतपुष्पोपशोभिता ।
श्वेताम्बरधरा नित्या श्वेतगन्धानुलेपना ॥ १॥

श्वेताक्षी शुक्लवस्त्रा च श्वेतचन्दनचर्चिता ।
वरदा सिद्धगन्धर्वैरृषिभिः स्तूयते सदा ॥ २॥

स्तोत्रेणानेन तां देवीं जगद्धात्रीं सरस्वतीम् ।
ये स्मरन्ति त्रिकालेषु सर्वाविद्यां लभन्ति ते ॥ ३॥ ये स्तुवन्ति

या देवी स्तूयते नित्यं ब्रह्मेन्द्रसुरकिन्नरैः ।
सा ममैवास्तु जिह्वाग्रे पद्महस्ता सरस्वती ॥ ४॥

इति श्रीसरस्वतीस्तोत्रं सम्पूर्णम् ।

श्रीसरस्वतीस्तोत्रं अगस्त्यमुनिप्रोक्तम्

श्रीगणेशाय नमः ।
या कुन्देन्दु तुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैस्सदा पूजिता
सा मां पातु सरस्वती भगवती निश्शेषजाड्यापहा ॥ १॥

दोर्भिर्युक्ता चतुर्भिं स्फटिकमणिनिभै रक्षमालान्दधाना
हस्तेनैकेन पद्मं सितमपिच शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ २॥

सुरासुरासेवितपादपङ्कजा करे विराजत्कमनीयपुस्तका ।
विरिञ्चिपत्नी कमलासनस्थिता सरस्वती नृत्यतु वाचि मे सदा ॥ ३॥

सरस्वती सरसिजकेसरप्रभा तपस्विनी सितकमलासनप्रिया ।
घनस्तनी कमलविलोललोचना मनस्विनी भवतु वरप्रसादिनी ॥ ४॥

सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।
विद्यारम्भं करिष्यामि सिद्धिर्भवतु मे सदा ॥ ५॥

सरस्वति नमस्तुभ्यं सर्वदेवि नमो नमः ।
शान्तरूपे शशिधरे सर्वयोगे नमो नमः ॥ ६॥

नित्यानन्दे निराधारे निष्कलायै नमो नमः ।
विद्याधरे विशालाक्षि शुद्धज्ञाने नमो नमः ॥ ७॥

शुद्धस्फटिकरूपायै सूक्ष्मरूपे नमो नमः ।
शब्दब्रह्मि चतुर्हस्ते सर्वसिद्ध्यै नमो नमः ॥ ८॥

मुक्तालङ्कृत सर्वाङ्ग्यै मूलाधारे नमो नमः ।
मूलमन्त्रस्वरूपायै मूलशक्त्यै नमो नमः ॥ ९॥

मनो मणिमहायोगे वागीश्वरि नमो नमः ।
वाग्भ्यै वरदहस्तायै वरदायै नमो नमः ॥ १०॥

वेदायै वेदरूपायै वेदान्तायै नमो नमः ।

गुणदोषविवर्जिन्यै गुणदीप्त्यै नमो नमः ॥ ११॥

सर्वज्ञाने सदानन्दे सर्वरूपे नमो नमः ।
सम्पन्नायै कुमार्यै च सर्वज्ञ ते नमो नमः ॥ १२॥

योगानार्य उमादेव्यै योगानन्दे नमो नमः ।
दिव्यज्ञान त्रिनेत्रायै दिव्यमूर्त्यै नमो नमः ॥ १३॥

अर्धचन्द्रजटाधारि चन्द्रबिम्बे नमो नमः ।
चन्द्रादित्यजटाधारि चन्द्रबिम्बे नमो नमः ॥ १४॥

अणुरूपे महारूपे विश्वरूपे नमो नमः ।
अणिमाद्यष्टसिद्धायै आनन्दायै नमो नमः ॥ १५॥

ज्ञान विज्ञान रूपायै ज्ञानमूर्ते नमो नमः ।
नानाशास्त्र स्वरूपायै नानारूपे नमो नमः ॥ १६॥

पद्मदा पद्मवंशा च पद्मरूपे नमो नमः ।
परमेष्ठ्यै परामूर्त्यै नमस्ते पापनाशिनी ॥ १७॥

महादेव्यै महाकाल्यै महालक्ष्म्यै नमो नमः ।
ब्रह्मविष्णुशिवायै च ब्रह्मनार्यै नमो नमः ॥ १८॥

कमलाकरपुष्पा च कामरूपे नमो नमः ।
कपालि कर्मदीप्तायै कर्मदायै नमो नमः ॥ १९॥

सायं प्रातः पठेन्नित्यं षाण्मासात्सिद्धिरुच्यते ।
चोरव्याघ्रभयं नास्ति पठतां शृण्वतामपि ॥ २०॥

इत्थं सरस्वतीस्तोत्रमगस्त्यमुनिवाचकम् ।
सर्वसिद्धिकरं नृणां सर्वपापप्रणाशनम् ॥ २१॥

॥ इत्यगस्तमुनि प्रोक्तं सरस्वतीस्तोत्रं सम्पूर्णम् ॥

श्रीसरस्वतीस्तोत्रं इन्द्रकृतम्

भृङ्गनील-नीलाञ्जनालका, पद्मराग-गाङ्गेय-मौलिका ।
पूर्णचन्द्र-बिम्बोज्ज्वलानना, श्रीसरस्वती मे प्रसीदतु ॥ १॥

फुल्लनेत्र-पङ्केरुहान्विता, रत्नक्लृप्त-ताटङ्क-भूषिता ।
चम्पक-प्रसूनाभ-नासिका, श्रीसरस्वती मे प्रसीदतु ॥ २॥

दर्पण-प्रभा-गण्ड-मण्डला, पल्लवाधरा दन्त-कुट्मला ।
मन्दहासिनी कम्बु-कन्धरा, श्रीसरस्वती मे प्रसीदतु ॥ ३॥

दीर्घ-बाहुका चातिकोमला, रत्न-कञ्चुका पीवर-स्तना ।
स्वर्ण-मौक्तिका कर्ण-भूषणा, श्रीसरस्वती मे प्रसीदतु ॥ ४॥

मञ्जु-भाषणा चार्वलित्रयी, सुन्दरोदरा निम्ननाभिका ।
लम्बितोदराधार-मेखला, श्रीसरस्वती मे प्रसीदतु ॥ ५॥

सूक्ष्म-मध्यमा भूनितम्बिनी, रत्नदन्ति-तुण्डोरु-मण्डिता ।
ब्रह्मदण्ड-जानु-द्वयान्विता, श्रीसरस्वती मे प्रसीदतु ॥ ६॥

मारतूणि-काकार-जङ्घिका, रत्न-किङ्किणी पादनूपुरा ।
कूर्मपृष्ठ-देशाङ्घ्रि-पृष्ठका, श्रीसरस्वती मे प्रसीदतु ॥ ७॥

गूढगुल्फ-लावण्य-रञ्जिता, चन्द्रिकांशुका श्वेतवर्णिनी ।
बिन्दुवासिनी बैन्दव-प्रिया, श्रीसरस्वती मे प्रसीदतु ॥ ८॥

कालिका-रमा-पार्श्व-सेविता, वेदवेदिता भेदनाशिनी ।
निर्मलात्मिकाद्वैतरूपिणी, श्रीसरस्वती मे प्रसीदतु ॥ ९॥

वासरालया भूसुरार्चिता, गौतमी-नदी तीरवासिनी ।
ब्राह्मण-प्रियापार-वैभवा, श्रीसरस्वती मे प्रसीदतु ॥ १०॥

इन्द्रेणैवं कृतं स्तोत्रं ये पठन्त्यनिशं तु ते ।
सरस्वती-प्रसादेन प्रपद्यन्तेऽष्टसिद्धिकाः ॥

॥ इति श्री-इन्द्रकृत-सरस्वती-स्तोत्रं ॥

श्रीसरस्वतीस्तोत्रं बृहस्पतिविरचितम्

श्रीगणेशाय नमः ।
बृहस्पतिरुवाच
सरस्वति नमस्यामि चेतनां हृदि संस्थिताम् ।
कण्ठस्थां पद्मयोनिं त्वां ह्रीङ्कारां सुप्रियां सदा ॥ १॥

मतिदां वरदां चैव सर्वकामफलप्रदाम् ।
केशवस्य प्रियां देवीं वीणाहस्तां वरप्रदाम् ॥ २॥

मन्त्रप्रियां सदा हृद्यां कुमतिध्वंसकारिणीम् ।
स्वप्रकाशां निरालम्बामज्ञानतिमिरापहाम् ॥ ३॥

मोक्षप्रियां शुभां नित्यां सुभगां शोभनप्रियाम् ।
पद्मोपविष्टां कुण्डलिनीं शुक्लवस्त्रां मनोहराम् ॥ ४॥

आदित्यमण्डले लीनां प्रणमामि जनप्रियाम् ।
ज्ञानाकारां जगद्द्वीपां भक्तविघ्नविनाशिनीम् ॥ ५॥

इति सत्यं स्तुता देवी वागीशेन महात्मना ।
आत्मानं दर्शयामास शरदिन्दुसमप्रभाम् ॥ ६॥

श्रीसरस्वत्युवाच
वरं वृणीष्व भद्रं त्वं यत्ते मनसि वर्तते ।
बृहस्पतिरुवाच
प्रसन्ना यदि मे देवि परं ज्ञानं प्रयच्छ मे ॥ ७॥

श्रीसरस्वत्युवाच
दत्तं ती निर्मलं ज्ञानं कुमतिध्वंसकारकम् ।
स्तोत्रेणानेन मां भक्त्या ये स्तुवन्ति सदा नराः ॥ ८॥

लभन्ते परमं ज्ञानं मम तुल्यपराक्रमाः ।
कवित्वं मत्प्रसादेन प्राप्नुवन्ति मनोगतम् ॥ ९॥

त्रिसन्ध्यं प्रयतो भूत्वा यस्त्विमं पठते नरः ।
तस्य कण्ठे सदा वासं करिष्यामि न संशयः ॥ १०॥

॥ इति श्रीरुद्रयामले श्रीबृहस्पतिविरचितं सरस्वतीस्तोत्रम्
सम्पूर्णम् ॥

श्रीसरस्वतीस्तोत्रम्
श्रीगणेशाय नमः ।
ॐ अस्य श्रीसरस्वतीस्तोत्रमन्त्रस्य । ब्रह्मा ऋषिः ।
गायत्री छन्दः । श्रीसरस्वती देवता ।
धर्मार्थकाममोक्षार्थे जपे विनियोगः ।
आरूढा श्वेतहंसे भ्रमति च गगने दक्षिणे चाक्षसूत्रं
वामे हस्ते च दिव्याम्बरकनकमयं पुस्तकं ज्ञानगम्या ।
सा वीणां वादयन्ती स्वकरकरजपैः शास्त्रविज्ञानशब्दैः
क्रीडन्ती दिव्यरूपा करकमलधरा भारती सुप्रसन्ना ॥ १॥

श्वेतपद्मासना देवी श्वेतगन्धानुलेपना ।
अर्चिता मुनिभिः सर्वैः ऋर्षिभिः स्तूयते सदा ।
एवं ध्यात्वा सदा देवीं वाञ्छितं लभते नरः ॥ २॥

शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् ।
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ ३॥

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ४॥

ह्रीं ह्रीं हृद्यैकबीजे शशिरुचिकमले कल्पविस्पष्टशोभे
भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्यांघ्रिपद्मे ।
पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसम्पादयित्रि
प्रोत्फुल्लज्ञानकूटे हरिनिजदयिते देवि संसारसारे ॥ ५॥

ऐं ऐं ऐं दृष्टमन्त्रे कमलभवमुखाम्भोजभूतस्वरूपे
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ।
न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नापि विज्ञानतत्त्वे
विश्वे विश्वान्तरात्मे सुरवरनमिते निष्कले नित्यशुद्धे ॥ ६॥

ह्रीं ह्रीं ह्रीं जाप्यतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते
मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् ।
विद्ये वेदान्तवेद्ये परिणतपठिते मोक्षदे मुक्तिमार्गे ।
मार्गातीतस्वरूपे भव मम वरदा शारदे शुभ्रहारे ॥ ७॥

धीं धीं धीं धारणाख्ये धृतिमतिनतिभिर्नामभिः कीर्तनीये
नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे ।
पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे
मातर्मात्रार्धतत्त्वे मतिमति मतिदे माधवप्रीतिमोदे ॥ ८॥

हूं हूं हूं स्वस्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते
सन्तुष्टाकारचित्ते स्मितमुखि सुभगे जृम्भिणि स्तम्भविद्ये ।
मोहे मुग्धप्रवाहे कुरु मम विमतिध्वान्तविध्वंसमीडे
गीर्गौर्वाग्भारति त्वं कविवररसनासिद्धिदे सिद्धिसाध्ये ॥ ९॥

स्तौमि त्वां त्वां च वन्दे मम खलु रसनां नो कदाचित्त्यजेथा
मा मे बुद्धिर्विरुद्धा भवतु न च मनो देवि मे यातु पापम् ।
मा मे दुःखं कदाचित्क्वचिदपि विषयेऽप्यस्तु मे नाकुलत्वं
शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदापि ॥ १०॥

इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो
वाणी वाचस्पतेरप्यविदितविभवो वाक्पटुर्मृष्टकण्ठः ।
सः स्यादिष्टाद्यर्थलाभैः सुतमिव सततं पातितं सा च देवी
सौभाग्यं तस्य लोके प्रभवति कविता विघ्नमस्तं व्रयाति ॥ ११॥

निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोधः
कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात् ।
दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो
वाग्देव्याः सम्प्रसादात्त्रिजगति विजयी जायते सत्सभासु ॥ १२॥

ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः ।
सारस्वतो जनः पाठात्सकृदिष्टार्थलाभवान् ॥ १३॥

पक्षद्वये त्रयोदश्यामेकविंशतिसंख्यया ।
अविच्छिन्नः पठेद्धीमान्ध्यात्वा देवीं सरस्वतीम् ॥ १४॥

सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः ।
वाञ्छितं फलमाप्नोति लोकेऽस्मिन्नात्र संशयः ॥ १५॥

ब्रह्मणेति स्वयं प्रोक्तं सरस्वत्याः स्तवं शुभम् ।
प्रयत्नेन पठेन्नित्यं सोऽमृतत्त्वाय कल्पते ॥ १६॥

॥ इति श्रीमद्ब्रह्मणा विरचितं सरस्वतीस्तोत्रं सम्पूर्णम् ॥

श्रीसरस्वतीस्तोत्रम्

रविरुद्रपितामहविष्णुनुतं
हरिचन्दनकुङ्कुमपङ्कयुतम्
मुनिवृन्दगजेन्द्रसमानयुतं
तव नौमि सरस्वति पादयुगम् ॥ १॥

शशिशुद्धसुधाहिमधामयुतं
शरदम्बरबिम्बसमानकरम् ।
बहुरत्नमनोहरकान्तियुतं
तव नौमि सरस्वति पादयुगम् ॥ २॥

कनकाब्जविभूषितभूतिभवं
भवभावविभावितभिन्नपदम् ।
प्रभुचित्तसमाहितसाधुपदं
तव नौमि सरस्वति पादयुगम् ॥ ३॥

भवसागरमज्जनभीतिनुतं
प्रतिपादितसन्ततिकारमिदम् ।
विमलादिकशुद्धविशुद्धपदं
तव नौमि सरस्वति पादयुगम् ॥ ४॥

मतिहीनजनाश्रयपारमिदं
सकलागमभाषितभिन्नपदम् ।
परिपूरितविश्वमनेकभवं
तव नौमि सरस्वति पादयुगम् ॥ ५॥

परिपूर्णमनोरथधामनिधिं
परमार्थविचारविवेकविधिम् ।
सुरयोषितसेवितपादतलं
तव नौमि सरस्वति पादयुगम् ॥ ६॥

सुरमौलिमणिद्युतिशुभ्रकरं
विषयादिमहाभयवर्णहरम् ।
निजकान्तिविलोमितचन्द्रशिवं
तव नौमि सरस्वति पादयुगम् ॥ ७॥

गुणनैककुलं स्थितिभीतिपदं

गुणगौरवगर्वितसत्यपदम् ।
कमलोदरकोमलपादतलं
तव नौमि सरस्वति पादयुगम् ॥ ८॥

इदं स्तवं महापुण्यं ब्रह्मणा च प्रकीर्तितम् ।
यः पठेत् प्रातरुत्थाय तस्य कण्ठे सरस्वती ॥